किन्नराप्सरसो नागान् सर्पान् किम्पुरुषानपि ।
मातृरक्षः पिशाचांश्च प्रेतभूतविनायकान् ॥ ३८ ॥

कूष्माण्डोन्मादवेतालान् यातुधानान् ग्रहानपि ।
खगान् मृगान् पशून् वृक्षान् गिरीन् नृप सरीसृपान् ॥

द्विविधाश्चतुर्विधाश्चान्ये जलस्थलनभौकसः ।
कुशलाकुशलमिश्राणां कर्मणां गतयस्त्विमाः ॥ ४० ॥

सत्त्वं रजस्तम इति तिस्रः सुरनृनारकाः ।
तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा ॥ ४१ ॥

---

मातरः अदित्यादयः । ब्राह्मयाद्या वा । पिशाचाः घण्टाकर्णादयः । प्रेता महोदरादयः । भूता भृङ्गिरिट्यादयः । विनायका: विघ्नादयः ॥ ३८ ॥

कूष्माण्डाः पलण्ड्वादयः[1] । उन्मादाः कालकर्णादयः । यातुधानाः रक्षोविशेषाः भृगुकुत्सादयः । ग्रहा अष्टादश । नवग्रहा वा । हे नृप । नृपाः प्रियव्रतादयो वा । सरीसृपाः सहस्रपादादयः ॥ ३९ ॥

सङ्ख्यातुमशक्यत्वात्सामान्यतो निर्दिशति– द्विविधेति । 'व्योमर्क्षपथ आकाशं नभः शब्दगुणोऽम्बरम् । पुष्करं गगनं विष्णोः पदं द्यौरभ्रमुच्यते' इत्यभिधानान्नभःशब्दः उभयलिङ्गः । तेषामुत्तमादित्वे कारणमाह– कुशलेति । उक्ताः इमाः जातयः कुशलादिकर्मणां गतयः फलानि ॥ ४० ॥

उक्तजातीः त्रेधा विभजति– सत्त्वमिति । सत्त्वं रजस्तम इति गुणत्रयहेतुकाः सुरनृनारकाः इति तिस्रो ज्ञेयाः इत्यन्वयः । सत्त्वहेतुकपुण्यफला सुरगतिः रजोहेतुकपुण्यपापफला मनुष्यगतिः । तमोहेतुकपापफला नारकी गतिः । अनेन नरकयोग्याः असुरा इत्युक्तं भवति । अवान्तरभेदोऽपि त्रिधेत्याह– तत्रापीति । गुणत्रयानुकूलकर्मभ्यः प्राप्तसुरनरासुरगतयः प्रत्येकं सात्त्विकराजसतामसतया त्रिधा भवन्ति । तथाहि– कल्यादिप्रधानाः असुराः तामसतामसाः । प्रधानासुरभृत्याः तामसराजसाः । अप्रसिद्धासुरास्तामससात्त्विकाः । केवलपापचारिणो मनुष्या राजसतामसाः । मिश्रकर्मकृतो मनुष्याः राजसराजसाः ।

---

1 पलाण्ड्वादयः - ज ट । स्वमाण्ड्वादयः - क ।

यदैवैकतमोऽन्याभ्यां स्वभाव उपहन्यते ।
तदैवेदं जगद्धाता भगवान् धर्मरूपधृक् ।
पुष्णाति स्थापयन् विश्वं तिर्यङ्नरसुरात्मभिः ॥ ४२ ॥

ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः ।
सन्नियच्छति तत्काले घनानीकमिवानिलः ॥ ४३ ॥

---

नन्वप्येषु पुण्यैककर्मकृतः उत्तममनुष्याः राजससात्त्विकाः । पृथगप्रसिद्धाः देवाः सात्त्विकतामसाः । तत्तत्त्वाभिमानिनो लोके ख्याताः सात्त्विकराजसाः । तत्त्वाभिमानिनो देवाः सात्त्विकसात्त्विकाः । सात्त्विकेभ्योऽपि सात्त्विकाः गरुडादित्रिकतद्भार्याः । तेभ्योऽपि सात्त्विकी ब्रह्मभार्या सरस्वती । ततोऽपि सात्त्विको ब्रह्मेति भेदः एकैकश इति शप्रत्ययेन ज्ञायते । तदुक्तं– 'तामसात्तामसा दैत्याः प्रधाना देवशत्रव' इत्यादिना ॥ ४१ ॥

एवं जगत्स्वरूपं निरूप्याधुना भगवदवतारावसरमाह– यदेति । यदा एकतमः स्वभावः सात्त्विकः अन्याभ्यां रजस्तमोभ्यां उपहन्यते तदैव तस्मिन्नवसर एव धाता पोषणादिकर्ता वर्णाश्रमादिधर्मप्रवर्तकरूपधरो भगवान् तिर्यङ्नरसुरात्मभिः मत्स्यकूर्मवराहरामकृष्णोपेन्द्रादिरूपैरवतीर्य इदं जगत् तत्त्वेन स्थापयन् पुष्णाति कृत्स्नं संवर्धयति । स्थितं रक्षतीत्यन्वयः । तेषु त्रिषु एकतमो भावः सात्त्विकतामसः सात्त्विकराजसः सात्त्विकसात्त्विको वा तामसराजसाभ्यामुपहन्यते तदेति वा । यदा तैः तामसादिभिः राजसतामसादिभिश्च दैत्यदानवराक्षसादिभिः ते त्रयः सात्त्विकभेदाः बाध्यन्ते तदा वराहादिरूपैरिति वा । तदुक्तम्– 'सात्त्विकेषु त्रिषु यदा त्वेकस्य प्रतिबाधन'मित्यादिना ॥ ४२ ॥

ननु संहारोऽप्यनियतश्चेत् तदुपद्रवेण जगद्रक्षणं दुःशकमित्याशङ्क्य स्वनियतरूपभेदेन संहारस्य क्रियमाणत्वात् न तदुपरोधो जगद्रक्षणस्येति ध्वनयति– तत इति । ततः स्थित्यनन्तरं प्रलयकाले प्राप्ते कालाग्निरुद्राणां आत्मा अन्तर्यामी स भगवान् आत्मनो ब्रह्मणः अन्तर्यामिणः स्वोदराद्यत्सृष्टं जगत् तदिदं सन्नियच्छति संहरति । कथमिव ? अनिलः घनानीकं मेघपटलमिवेत्यन्वयः । तदुक्तम्– मत्स्यादिरूपी पोषयति नृसिंहो रुद्रसंस्थित' इत्यादिना । कालो यमः ॥ ४३ ॥

---

१ अयं ख ज पाठः । अन्यत्र नास्ति ।

इत्थम्भावेन कथितो भगवान्भगवत्तमः ।
नेत्थंभावेन हि परं द्रष्टुमर्हन्ति सूरयः ॥ ४४ ॥

न चास्य जन्मकर्माणि परस्य न विधीयते ।
कर्तृत्वं प्रतिषेधार्थं माययारोपितं हि तत् ॥ ४५ ॥

अयं ते ब्रह्मणः कल्पः सविकल्प उदाहृतः ।
विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥ ४६ ॥

---

उक्तमर्थं प्रमाणयति- इत्थं भावेनेति । भगवन्तः ब्रह्मादयः तेभ्यः अतिशयेन उत्तमः भगवत्तमः । भगवान् पूर्णैश्वर्यादिगुणः । ना सर्वजगत्कर्ता परमपुरुषः इत्थम्भावेन सृष्टिस्थितिसंहारादि-कर्तृत्वेन सर्वलक्षणत्वेन सर्वदोषविवर्जितत्वेन कथितः प्रतिपादितः । श्रुत्यादाविति शेषः । 'यतो वा इमानि भूतानि जायन्ते' इत्यादौ । तथा कथने कारणमाह- इत्थमिति । सूरयः परं परमात्मानं इत्थम्भावेन सर्ववैलक्षण्येन द्रष्टुमर्हन्ति हि । नाभेदज्ञानेन । अतः तथा कथनं युक्तमिति भावः । यद्वा भगवान् जगत्स्रष्टृत्वादिलक्षणविशिष्टत्वेन कथित इति यत्तस्मात्सूरयः परमार्थदर्शिनः इत्थम्भावे चेतसि परं द्रष्टुं नार्हन्तीति न हि । अर्हन्त्येवेति । अनेन ज्ञानिप्रत्यक्षमपि प्रोक्तार्थे प्रमाणमिति सूचितम् ॥ ४४ ॥

अत्रोच्यमानं जन्मादिकर्तृत्वं मायामयं किं न स्यादत्राह- न चेति । अस्य परस्य कर्तृत्वं जन्मकर्माणि यथा जीवानां बन्धस्य प्रतिषेधार्थं भवन्ति तथा न विधीयत इति । वेदादौ कर्तृत्वं जन्म-कर्म च विधीयत एव । अतः मायया स्वेच्छया आरोपितं नित्यारूढं स्वरूपाभिन्नत्वात् तत्कर्तृत्वं नानिर्वाच्यम् । 'प्रतिषेधाय बन्धस्य जीवानां परमेशितुः । स्वेच्छयैव तु कर्तृत्वं नित्यारूढं चिदात्मकमि'ति वचनात् । 'रूप उपरिभाव' इति धातोः 'सुभद्रां रथमारोप्ये'ति प्रयोगाच्च । 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतेश्च । अनेन मायाशब्दस्य इच्छार्थत्वं, न मिथ्यार्थत्वमित्युक्तं भवति । हिशब्देन 'निरस्तकु-हक'मिति पूर्वोक्तं सूचयति ॥ ४५ ॥

सम्प्रत्युक्तब्रह्मकल्पेनान्यब्रह्मकल्पानाञ्च साधारण्यमाह- अयमिति । अयं ब्रह्मणः प्रथमः कल्पः तवोदाहृतः । मयेति शेषः । इत्यन्वयः । कीदृशः ? सविकल्पः मन्वन्तरादिविविधकल्पेनसहितः । यत्र

परिमाणञ्च कालस्य कल्पलक्षणविग्रहम् ।
यथा परस्ताद्व्याख्यास्ये पाद्मं कल्पमिमं शृणु ॥ ४७ ॥

शौनक उवाच—

यदाह नो भवान् सूत क्षत्ता भागवतोत्तमः ।
चचार तीर्थानि भुवस्त्यक्त्वा बन्धून्सुदुस्त्यजान् ॥ ४८ ॥

कुत्र कौषारवेस्तस्य संवादोऽध्यात्मसंभवः ।
यद्वा स भगवांस्तस्मै पृष्टस्तत्त्वमुवाच ह ॥ ४९ ॥

ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् ।
बंधुत्यागनिमित्तं च यथैवागतवान् पुनः ॥ ५० ॥

---

ब्रह्मकल्पे अन्यब्रह्मकल्पानां अन्यकल्पानाञ्च साधारणः समानः विधिः यत्र च प्राकृतवैकृताः सर्गाः सन्तीत्यर्थः । अनेन प्राकृतादिसर्गकथनं साधारण्ये कारणमित्युक्तं भवति ॥ ४६ ।

श्रोतृप्रवृत्त्यर्थं उत्तरस्कन्धार्थं प्रतिजानीते- परिमाणमिति । कल्पानां लक्षणानि विग्रहं इयत्ताञ्च कल्पलक्षणस्वरूपं वा परस्तात् पश्चात यथावत् व्याख्यास्ये । प्रथमतः इमं पाद्मं कल्पं शृणु । इत्यन्वयः ॥ ४७ ॥

अस्य ग्रन्थस्य शुकशिष्यसूतशौनकसंवादत्वं स्पष्टयन् शौनकप्रश्नप्रकारमाह- यदाहेति । 'विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्' इत्यादिना क्षत्ता बंधूंस्त्यक्त्वा भुवस्तीर्थानि चचार ॥ ४८ ॥

तत्र तीर्थसञ्चरणसमये मैत्रेयादात्मज्ञानं चापेति यद् भगवानाह ततः किं तत्राह- कुत्र इति । तस्य विदुरस्य अध्यात्मसंभवः आत्मनां पुरुषाणां अधिकस्य हरेः कथायाः संभवो यस्मात् स तथा । यद्वा आत्मानं शरीरमधिकृत्य वर्तमानं देहेन्द्रियादि तद्विषयो विदुरेण पृष्टः स भगवांस्तस्मै विदुराय । यद्वा तत्त्वमुवाच ह । हेत्यनेन ग्रन्थान्तरप्रसिद्धिमाह- 'प्रत्यारम्भे प्रसिद्धौ हे'ति यादवः ॥ ४९ ॥

तत्र सूतः शौनकप्रश्नपरिहारप्रकारं प्रतिजानीते- राज्ञेति ॥ ५० ॥

सूत उवाच—

राज्ञा परीक्षिता पृष्टो यदवादीन्महामुनिः ।
तद्वोऽभिधास्ये शृणुत राज्ञः प्रश्नानुसारतः ॥ ५१ ॥

---

यत् समाधानं राज्ञः प्रश्नानुसारत इति पुनरुक्त्या प्रश्नयोरेकविषयत्वेन परिहारोऽपि तदविनाभूत इति तत्प्रश्नप्रतिवचनमपि युष्मत्प्रश्नप्रतिवचनमेवेति दर्शयति ॥ ५१ ॥

द्वितीयस्कंधगा ह्येषा पदरत्नावली मया ।
स्वर्पिता चरणाम्भोजे पद्मनाभस्य भासताम् ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
द्वितीयस्कन्धे दशमोऽध्यायः ॥

॥ इति द्वितीयस्कन्धः ॥

* * *

